श्रीगणेशायनमः। श्रीरामायनमः। अस्यश्रीरामचन्द्रस्तवराजस्तोत्रमंत्र
स्यसनत्कुमारऋषिरनुष्टुप्छन्दः॥ श्रीरामोदेवतासीताबीजंहनूमा
न्शक्तिः श्रीरामप्रीत्यर्थेजपेविनियोगः॥ सूतउवाच। सर्वशास्त्रार्थत
त्त्वज्ञंव्यासंसत्यवतीसुतम्। धर्मपुत्रःप्रहृष्टात्माप्रत्युवाचमुनीश्व
रम्।१ युधिष्ठिरउवाच। भगवन्योगिनांश्रेष्ठ सर्वशास्त्रविशारद
किंतत्त्वंकिंपरंजाप्यंकिंध्यानंमुक्तिसाधनम्।२ श्रोतुमिच्छामितत्स
र्वंब्रूहिमेमुनिसत्तम। श्रीवेदव्यासउवाच। धर्मराजमहाभागशृणु
वक्ष्यामितत्त्वतः॥ यत्परंयद्गुणातीतंयज्ज्योतिरमलंशिवम्।३ तदेवपर
मंतत्त्वंकैवल्यपदकारणम्।४ श्रीरामेतिपरंजाप्यंतारकंब्रह्मसंज्ञि
कम्। ब्रह्महत्यादिपापघ्नमितिवेदविदोविदुः।५ श्रीरामरामेतिज
नायेजपंतिचसर्वदा। तेषांभुक्तिश्चमुक्तिश्चभविष्यतिनसंश

२

राघवं द्विभुजं बालं राममीषत्स्मिताननम् १५ तुलसीकुंदमन्दारपुष्पमाल्यै
रलंकृतम् कर्पूरागुरुकस्तूरीदिव्यगंधानुलेपनम् १६ योगशास्त्रेष्व
भिरतं योगीशं योगदायकम् सदाभरणशोभि त्रिशत्तुभैरूपशोभितम्
१७ विद्याधरसुराधीशैः सिद्धगंधर्वकिन्नरैः योगीन्द्रैर्नारदाद्यैश्च
स्तूयमानमहर्निशम् १८ विश्वामित्रवशिष्ठाद्यैर्मुनिभिः परिसेवि
तम् सनकादिमुनिश्रेष्ठैर्योगिवृन्दैश्च सेवितम् १९ रामं रघुवरं
वीरं धनुर्वेदविशारदम् मंगलायतनं देवं रामं राजीवलोचनम् २०
सर्वशास्त्रार्थतत्त्वज्ञमानन्दकरसुन्दरम् कौशल्यानन्दनं रामं ध
नुर्बाणधरं हरिम् २१ एवं संचिंतयेद्विष्णुं यज्ज्योतिरमलं विभुम्
प्रहृष्टमानसो भूत्वा मुनिवर्यः स नारदः २२ सर्वलोकहितार्थाय
तुष्टाव रघुनन्दनम् कृताञ्जलिपुटो भूत्वा चिंतयन्नद्भुतं हरिम्
२३ यदेकं यत्परं नित्यं यदनन्तं चिदात्मकम् यदेकं व्यापकं लोके त

१

२

स्तवराजं पुराणोक्तं नारदेन च धीमता तत्सर्वं संप्रवक्ष्यामि हरिध्यानपुरः
सरम् ७ तापत्रयाग्निशमनं सर्वाघौघनिःकृंतनम् दारिद्र्यदुःखशमनं
सर्वसंपत्करं शिवम् ८ विज्ञानफलदं दिव्यं मोक्षैकफलसाधनम्
नमस्कृत्य प्रवक्ष्यामि रामं कृष्णं जगन्मयम् ९ अयोध्यानगरे रम्ये
रत्नमंडपमध्यगे स्मरेत्कल्पतरोर्मूले रत्नसिंहासनं शुभम् १०
तन्मध्ये ऽष्टदलं पद्मं नानारत्नैश्च वेष्टितम् स्मरेन्मध्ये दाशर
थिं सहस्रादित्यतेजसम् ११ पितुरंकगतं राममिंद्रनीलमणिप्रभं
॥ कोमलांगं विशालाक्षं विद्युद्वर्णांबरावृतम् १२ भानुकोटिप्रतीका
शं किरीटेन विराजितम् रत्नग्रैवेयकेयूरं रत्नकुंडलमंडितम्
१३ रत्नकंकणमंजीरं कटिसूत्रैरलंकृतम् श्रीवत्सकौस्तुभोरस्कं
मुक्ताहारोपशोभितम् १४ दिव्यरत्नसमायुक्तं मुद्रिकाभिरलंकृतं

चिन्मयानन्दविग्रहम् हलायुधं विष्णुमीशानं वलरामं कृपानिधिम् २२ श्री
वल्लभं कृपानाथं जगन्मोहनमच्युतम् मत्स्यकूर्मवराहादिरूपधारिणमव्
ययम् २३ वासुदेवं जगद्योनिमनादिनिधनं हरिम् गोविन्दं गोप
तिं विष्णुं गोपीजनमनोहरम् २४ गोपालं गोपरिवारं गोपकन्यासमा
वृतम् विद्युत्पुंजप्रतीकाशं रामं कृष्णं जगन्मयम् २५ गोगोपिकास
माकीर्णं वेणुवादनतत्परम् कामरूपं कलावंतं कामिनीकामदं वि
भुम् २६ मन्मथं मथुरानाथं माधवं मकरध्वजम् श्रीधरं श्रीकरं
श्रीशं श्रीनिवासं परात्परम् २७ भूतेशं भूपतिं भद्रं विभूतिं भूतिभू
षणम् सर्वदुःखहरं वीरं दुष्टदानववैरिणम् २८ श्रीनृसिंहं महा
बाहुं महान्तं दीप्ततेजसम् चिदानन्दमयं नित्यं प्रणवं ज्योतिरू
पिणम् २९ आदित्यमण्डलगतं निश्चितार्थस्वरूपिणम् भक्ति

रूपं चिंतयाम्यहम् २४ विज्ञानहेतुं विमलायताक्षं प्रज्ञानरूपं स्वसु
खैकहेतुम् श्रीरामचन्द्रं हरिमादिदेवं परात्परं राममहं भजामि २५
कविं पुराणं पुरुषं पुरस्तात्सनातनं योगिनमीशितारम् अणोर
णीयांसमनंतवीर्य्यं प्राणेश्वरं राममसौ ददर्श २६ श्रीनारद उवा
च नारायणं जगन्नाथमभिरामं जगत्पतिम् कविं पुराणं वागीशं
रामं दशरथात्मजम् २७ राजराजं रघुवरं कौशल्यानन्दवर्द्धनम्
भर्गं वरेण्यं विश्वेशं रघुनाथं जगद्गुरुम् २८ सत्यं सत्यप्रियं श्रेष्ठं जा
नकीवल्लभं विभुम् सौमित्रिपूर्वजं शान्तं कामदं कमलेक्षणम् २९
आदित्यं रविमीशानं घृणिं सूर्यमनामयम् आनन्दरूपिणं सौम्यं
राघवं करुणामयम् ३० जामदग्निं तपोमूर्तिं रामं परशुधारिणं
वाक्पतिं वरदं वाच्यं श्रीपतिं पक्षिवाहनम् ३१ श्रीशार्ङ्गधारिणं रामं

श्रीरामजयरामः

४ सूर्य्यमण्डलमध्यस्थं रामं सीतासमन्वितम्‌ नमामि पुण्डरीकाक्षममेयं गुरुतत्परम्‌ ४९ नमोस्तु वासुदेवाय ज्योतिषांपतये नमः नमोस्तु रामदेवाय जगदानन्दरूपिणे ५० नमो वेदान्तवेद्याय योगिने ब्रह्मवादिने मायामयनिरस्ताय प्रपन्नजनसेविनम्‌ ५१ वन्दामहे महेशानं चण्डकोदण्डखण्डनम्‌ जानकीहृदयानन्दं चन्दनं रघुनन्दनम्‌ ५२ उत्फुल्लामलकोमलोत्पलदलश्यामाय रामाय ते ॥ कामाय प्रमदामनोहरगुणग्रामाय रामात्मने योगारूढमुनीन्द्रमानससरोहंसाय संसारविध्वंसाय स्फुरदोजसे रघुकुलोत्तंसाय पुंसे नमः ५३ भवो भवं वेदविदो वरिष्ठमादित्यचन्द्रानिलसुप्रभावं सर्वात्मकं सर्वगतं स्वरूपं नमामि रामं तमसः पुरस्तात्‌ ५४ निरंजनं निःप्रतिमं निरीहं निराश्रयं निष्कलमप्रपंचम्‌ नित्यं ध्रुवं निर्विषय

गुराण ४

प्रियं पद्मनेत्रं भक्तानामीप्सितप्रदम् ४० कौशलेयं कलामूर्त्तिं काकु
त्स्थं कमलाप्रियम् सिंहासने समासीनं नित्यं व्रतमकल्मषम् ४१
विश्वामित्रप्रियं दान्तं स्वदारनियतव्रतम् यज्ञेशं यज्ञपुरुषं यज्ञपा
लनतत्परम् ४२ सत्यसंधं जितक्रोधं शरणागतवत्सलम् सर्व
क्लेशापहरणं विभीषणवरप्रदम् ४३ दशग्रीवहरं रौद्रं केशवं केशि
मर्द्दनं वालिप्रमथनं वीरं सुग्रीवेप्सितराज्यदम् ४४ नरवा
नरदेवैश्च सेवितं हनुमत्प्रियम् शुद्धं सूक्ष्मं परं शान्तं तारकं ब्रह्म
रूपिणम् ४५ सर्वभूतात्मभूतस्थं सर्वाधारं सनातनम् सर्वका
रणकर्तारं निदानं प्रकृतेः परम् ४६ निरामयं निराभासं निरवद्यं निरंज
नम् नित्यानन्दं निराकारं अद्वैतं तमसः परम् ४७ परात्परतरं तत्त्वं स
त्यानन्दं चिदात्मकम् मनसा शिरसा नित्यं प्रणमामि रघूत्तमम् ४८

भजामि ६१ तत्वस्वरूपं पुरुषं पुराणं स्वतेजसापूरितविश्वमेकम् राजाधिरा
जं रविमण्डलस्थं विश्वेश्वरं राममहं भजामि ६२ लोकाभिरामं रघुवंश
नाथं हरिं चिदानन्दमयं मुकुन्दम् अशेषविद्याधिपतिं कवीन्द्रं नमा
मि रामं तमसः परस्तात् ६३ योगीन्द्रसंघैः परिसेव्यमानं नारायणं
निर्मलमादिदेवम् नतोस्मि नित्यं जगदेकनाथं आदित्यवर्णं तम
सः परस्तात् ६४ विभूतिदं विश्वसृजं विराजं राजेन्द्रमीशं रघुवंशना
थम् अचिंत्यमव्यक्तमनन्तमूर्तिं ज्योतिर्मयं राममहं भजामि ६५
अशेषसंसारविकारहीनं आद्यंतसंपूर्णसुखाभिरामम् समस्त
साक्षीं तमसः परस्तात् नारायणं विष्णुमहं भजामि ६६ मुनीन्द्र
गुह्यं परिपूर्णमेकं कलानिधिं कल्मषनाशहेतुम् परात्परं यत्परमं
पवित्रं नमामि रामं महतो महान्तम् ६७ ब्रह्मा विष्णुश्च रुद्रश्च देवे
न्द्रो देवतास्तथा आदित्यादिग्रहाश्चैव त्वमेव रघुनन्दन ॥६८॥

स्वरूपंनिरंतरंराममहंभजामि ५५ भवाब्धिपोतंभरताग्रजंतंभक्तिप्रि
यभानुकुलप्रदीपम् भूतत्रिनाथं भुवनाधिपत्यंभजामिरामंभव
रोगवैद्यम् ५६ सर्वाधिपत्यंसमरंगधीरंसत्यंचिदानन्दमयंस्वरू
पम् सत्यंशिवंशांतिमयंशरण्यंसनातनंराममहंभजामि ५७ का
र्यक्रियाकारणमप्रमेयंकविंपुराणंकमलायताक्षम् कुमारवे
द्यंकरुणामयंतंकल्पद्रुमंराममहंभजामि ५८ त्रैलोक्यनाथं
सरसीरुहाक्षंदयानिधिंद्वन्द्वविनाशहेतुम् महाबलंवेदनिधिंसु
रेशंसनातनंराममहंभजामि ५९ वेदान्तवेद्यंकविमीशितारं अ
नादिमध्यांतमचिन्त्यमाद्यम् अगोचरंनिर्मलमेकरूपंनमामि
रामंतमसःपरस्तात् ६० अशेषवेदात्मकमादिसंज्ञमजंहरिंवि
ष्णुमनन्तमाद्यम् अपारसंवित्सुखमेकरूपंपरात्परंराममहं

तारकं ब्रह्म त्वत्तोन्यन्नैव किंचन ॥ ७५ ॥ शांतं सर्वगतं सूक्ष्मं परंब्र
ह्मसनातनं राजीवलोचनं रामं प्रणमामि जगत्पतिं ॥ श्रीवेदव्या
स उवाच ततः प्रसन्नः श्रीरामो प्रोवाच मुनिपुंगवं तुष्टोस्मि मु
निशार्दूल वृणुष्व वरमुत्तमं ॥ ७७ ॥ श्रीनारद उवाच यदि तुष्टोसि
सर्वज्ञ श्रीराम करुणानिधे ॥ त्वन्मूर्ति दर्शनेनैव कृतार्थोहं मम
प्सितं ॥ ७८ ॥ धन्योहं कृतकृत्योहं कृतपुण्योहं पुरुषोत्तम ॥ अद्य
मे सफलं जन्म जीवितं सफलं च मे ॥ ७९ ॥ अद्य मे सफलं ज्ञानं
अद्य मे सफलं तपः ॥ अद्य मे सफलं पश्यन् त्वत्पादांभोजदर्शना
त् ॥ ८० ॥ अद्य मे सफलं सर्वं त्वन्नाम स्मरणात् तथा ॥ त्वत्पादांभो
रुहद्वंद्वे सद्भक्तिं देहि राघव ॥ ८१ ॥ ततः परमसंप्रीतो रामः प्राह स
नारदं ॥ श्रीराम उवाच मुनिवर्य महाभाग मुने त्विष्टं ददामि ते ॥



९
गु० नी० र०
२८
6

तापसाश्च षयः सिद्धाः साध्याश्च नमुतस्तथा विप्रा वेदास्त
थायज्ञाः पुराणं धर्मसंहिताः वर्णाश्रमास्तथा धर्मा वर्णाध
र्मास्तथैव च यक्षराक्षसगंधर्वा दिक्पाला दिग्गजादयः ७०
सनकादि मुनिश्रेष्ठास्त्वमेव रघुपुंगव वसवोष्टौ त्र
यः काला रुद्रा एकादश स्मृताः ७१ तारका दश दिक्चैव
त्वमेव रघुनंदन सप्तद्वीपाः समुद्राश्च नगा नद्यस्तथा द्रु
माः ७२ स्थावरा जंगमाश्चैव त्वमेव रघुनायक देव
पं३ तिर्यङ्मनुष्याणां दानवानां तथैव च ७३ माता पिता तथा
भ्राता त्वमेव रघुवल्लभ सर्वेषां त्वं परं ब्रह्म त्वन्मयं सर्व
मेव हि ७४ त्वमक्षरं परं ज्योतिस्त्वमेव पुरुषोत्तम त्वमेव

ब्रह्महत्यादिपापानि तत्समानि बहूनि च ८८ स्वर्णस्तेयी सुरापारी गुरुतल्पाप्युतानि च गोवधाद्युपपापानि अन्नतो त्संभवानि च ८९ सर्वैः प्रमुच्यते पापैः कल्पायुतशतोद्भवैः मानसं वाचिकं पापं कर्मणा समुपार्जितं ९० श्रीरामस्मरणेनैव तत्क्षणान्नश्यति ध्रुवं इदं सत्यमिदं सत्यं सत्यमेतदिहोच्यते ९१ रामं सत्यं परं ब्रह्म रामात्किंचिन्न विद्यते तस्माद्रामस्वरूपो पं सत्यं सत्यमिदं जगत् ९२ श्रीरामचंद्र रघुपुंगव राजवर्य राजेंद्र राम रघुनायक राघवेश ९३ राजाधिराज रघुनंदन रामभद्र दासोहमद्य भवतः शरणं गतोस्मि ९३ वैदेहीसहितं सुरद्रुमतले हैमे महामंडपे म

7 ७ चि ५

पत्वयाचेप्सितं सर्वं मनसश्चतृविष्यति ॥ ८३ ॥ श्रीनारदउवाच ॥ वरं न याचे रघुनाथ युष्मत्पादाब्जभक्तिः सततं ममास्तु इदं प्रियं नाथ वरं प्रयच्छ पुनः पुनस्त्वामिदमेव याचे ॥ श्रीवेदव्यासउवाच ॥ इत्येवमीडितो रामः प्रादात्तस्मै वरांतरं विरराम महातेजाः सच्चिदानंदविग्रहः ॥ ८४ ॥ अद्वैतममलं ज्ञानं त्वन्नामस्मरणं तथा ॥ अंतर्ध्यानं जगन्नाथः पुरतस्तस्य राघवः ॥ ८५ ॥ इति श्रीरघुनाथस्य स्तवराजमनुत्तमं ॥ सर्वसौभाग्यसंपत्तिदायकं मुक्तिदं शुभं ॥ ८६ ॥ कथितं ब्रह्मपुत्रेण वेदानां सारमुत्तमं ॥ गुह्याद्गुह्यतमं दिव्यं तव स्नेहात्प्रकीर्तितं ॥ ८७ ॥ यः पठेत् शृणुयाद्वापि त्रिसंध्यं श्रद्धयान्वितः ॥

जलनिधिमज्जनं रक्षमामार्त्तबंधो ९८ रामरत्नमहं वंदे चि
त्रकूटपतिं हरिं कौशल्याभक्तिसंभूतं जानकीकंठभूषणं
९९ विमलकमलनेत्रं विभ्निलगात्रं तपनकुलपवित्रं
दानवीभ्रांतमित्रं भुवनकुलपवित्रं भूमिपुत्रीकलत्रम
मितगुणसमुद्रं श्रीरामचंद्रं नमामि १०० इति श्रीसनत्कु
मारसंहितायां नारदोक्तं श्रीरामस्तवराजस्तोत्रं संपूर्णं शु
भमस्तु सम्वत् १८९५ ॥

दानवीतादुका साएरधान्नंतमः तप्यनाशकमित्रःसूर्यः तं ८

ध्येपुष्पकमासने मणिमये वीरासने संस्थितं अग्रे वाचय
ति प्रभंजनसुते तत्वं च मुनिभिः परं व्याख्यातं भरतादिभिः
परिवृतं रामं भजे श्यामलं ९४ रामं रत्नकिरीटकुंडलयु
तं केयूरहारान्वितं सीतालंकृतवामभागममलं सिंहासन
स्थं विभुं सुग्रीवादिहरीश्वरैः सुरगणैः संसेव्यमानं सदा
विश्वामित्रपराशरादिमुनिभिः संस्तूयमानं प्रभुं ९५ स
कलगुणनिधानं योगिभिः स्तूयमानं भुजविजितवि
मानं राक्षसेंद्रादिमानं महितवृषभयानं सीतया शो
भमानं स्मृतहृदयविमानं ब्रह्मरामाभिधानं ९६ रघु
वरतव मूर्तिर्मामके मानसाब्जे नरकगतिहरं ते नाम

धेयं मुखे मे अनिशमतुलभक्त्या मस्तकं त्वत्पदाब्जे भव